अथ

# पुरुषसूक्त श्रीसूक्त

॥ प्रारम्भः ॥



श्रीगणेशाय नमः ॥ अथमाध्यन्दिनीयपुरुषसू-
क्तप्रारंभः ॥ हरिः ॐ सहस्रशीर्षापुरुषः सहस्रा-
क्षः सहस्रपात् ॥ सभूमिꣳसर्व्वतस्पृत्वात्यति-
ष्ठद्दशांगुलम् ॥ १ ॥ पुरुषऽएवेदꣳसर्व्वंयद्भूतं-
यच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेना-
तिरोहति ॥२॥ एतावानस्य महिमातोज्ज्यायाँ-
श्च्च पूरुषः ॥ पादोस्यविश्श्वाभूतानि त्रिपाद
स्यामृतन्दिवि॥३॥त्रिपादूर्द्ध्वऽउदैत्पुरुषःपादोस्ये-

पु० हाभवत्पुनः॥ ततोविष्वङ्व्यक्क्रामत्साशनानशने अभि सू०
॥२॥ शने ऽअभि ॥४॥ ततो विराडजायत विराजोअधि-
पूरुषः॥ सजातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः
॥५॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्ज्यम्
॥ पशूँस्ताँश्चक्रे व्वायव्व्या नारण्या ग्राम्याश्चये॥६॥
तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे॥ छ-
न्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥७॥ त-
स्माद श्वा ऽअजायन्त येकेचोभयादतः॥ गावो- ॥२॥

ह जज्ञिरे तस्म्मात्तस्म्माज्जाताऽअजावयं॑ ॥८॥
तंय्यज्ञम्बर्हिषिप्प्रौक्षन्न्पुरुंषञ्जातमंग्ग्रतं॑। तेनंदे-
वाऽअंयजन्तसाद्ध्याऽऋषंयश्च्चये॥९॥ यत्पुरुषं
व्व्यदंधुः कतिधाव्व्यंकल्प्पयन्॥ मुखङ्किमंस्स्या
सीत्किम्बाहू किमूरू पादाऽउच्च्येते ॥१०॥
ब्राह्मणोस्स्यमुखंमासीद्बाहूराजन्न्यः कृतः ॥
उरूतदस्य यद्वैश्यंः पद्भ्याथ्शूद्रोऽअजायत॥११॥
चन्द्रमामनसो जातश्च्चक्षोः सूर्य्योऽअजायत ॥

पु०
॥३ श्श्रोत्रांद्वायुश्च्च प्प्राणाश्च्च मुखां दग्निरंजायत सू०
॥ १२ ॥ नाभ्भ्यांऽआसीदन्तरिक्षᳪशीर्ष्णोंद्
द्यौःसमंवर्त्तंत । पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथां लो-
काँ २ऽअंकल्प्पयन् ॥१३॥ यत्त्पुरुषेण हविषां देवा
यज्ञमतन्न्वत ॥ व्वसन्तोस्यासींदाज्ज्यङ्ग्री-
ष्म्मऽइध्मः शरद्धविः ॥ १४ ॥ सप्प्तास्स्यांसन्न्प-
रिधयस्त्त्रिः सप्प्त समिधः कृताः ॥ देवा यद्य- ॥३॥
ज्ञन्तन्न्वानाऽअबंध्नन्न्पुरुषम्पशुम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमा-
न्यासन् ॥ तेह नाकम्महिमानः सचन्त यत्र पूर्वे
साध्याः सन्ति देवाः ॥ १६ ॥ इति पुरुष सूक्तं
समाप्तम् ॥

श्रीगणेशाय नमः ॥ अथ श्रीसूक्तप्रारम्भः ॥

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह॥१॥
तांम आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥

पु० यस्यां हिरंण्यं विन्देयं गामश्वं पुरुषानहम् सू०
॥४॥ ॥ २॥ अश्वपूर्वां रंथमध्यां हस्तिनांदप्रमोदि-
नीम् ॥ श्रियं देवीमुपंह्वये श्रीर्मांदेवीर्जुंषताम्
॥ ३ ॥ कांसो स्मितां हिरंण्यप्राकारांमार्द्रांज्वलं-
न्तीं तृप्तां तर्पयंन्तीम् ॥ पद्मे स्थितां पद्मवंर्णां
तामिहोपंह्वये श्रियंम् ॥४॥ चन्द्रां प्रंभासां यशसा
ज्वलंन्तीं श्रियं लोके देवजुंष्टामुदाराम् ॥ तां
पद्मनेमिं शरंणामहं प्रपंद्येऽलक्ष्मीर्मे नश्यतां ॥४॥

त्वां वृणोमि ॥५॥ आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः ॥ तस्य फलानि
तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥६॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह ॥ प्रादुर्भूतो सुराष्ट्रेऽस्मिन्कीर्तिं वृद्धिं ददातु मे ॥७॥ क्षुत्पिपासामलाज्येष्ठा अलक्ष्मीर्नाशयाम्यहम् ॥ अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां

पु० करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये
॥४॥ श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचः सत्य सू०
मशी महि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां
यशः ॥ १० ॥ कर्दमेन प्रजाभूता मयि सम्भ्रम
कर्दम ॥ श्रियं वासयमे कुले मातरं पद्ममालि-
नीम् ॥ ११ ॥ आपः सृजन्तु स्निग्धानि चिक्ली-
त वसमे गृहे ॥ नीचदेवीं मातरंश्रियं वासय मे ॥५॥
कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टीं सुवर्णां हे-

मालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो
ममावह ॥ १३ ॥ आर्द्रां यः करिणीं यष्टिं पिङ्ग-
लां पद्ममालिनीम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं
जातवेदो ममावह ॥ १४॥ तां मऽआवहजातवे-
दोलक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्र-
भूतिं गावोदास्योश्वान्विन्देयं पुरुषानहम् ॥१५॥
यः शुचिः प्रयतोभूत्वाजुहुयादाज्यमन्वहम् ॥
श्रियः पञ्चदशर्चंञ्च श्रीकामः सततं जपेत् ॥१६॥

* इति श्रीसूक्तं समाप्तम् *

श्रीः ॥ सरसिजनिलये सरोजहस्ते धवल-
तरे शुभगन्धमाल्यशोभे ॥ भगवति हरिवल्लभे
मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १ ॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ॥ धनमि-
न्द्रो बृहस्पतिर्वरुणं धनमाश्विनौ ॥ २ ॥ वैनतेय
सोमं पिब सोमं पिबतु वृत्रहा ॥ सोमं धनस्य
सोमिनो मह्यं ददातु सोमिनः ॥ ३ ॥ न क्रोधो
न च मात्सर्यं न लोभो नाशुभा मतिः ॥ भवन्ति
कृतपुण्यानां भक्तानां सूक्तजापिनाम् ॥ ४ ॥
पद्मानने पद्म ऊरु पद्माक्षि पद्मसंभवे ॥ तन्मे

भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ॥ ५ ॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ॥
विष्णुप्रियां सखीं देवीं नमाम्यच्युतवल्लभाम्
॥ ६ ॥ महालक्ष्मीं च विद्महे विष्णुपत्नीं च
धीमहि ॥ तन्नो लक्ष्मीः प्रचोदयात् ॥ ७ ॥
पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलाय-
ताक्षि ॥ विश्वप्रिये विश्वमनोनुकूले त्वत्पाद-
पद्मं मयि सन्निधत्स्व ॥ ८ ॥ आनन्दः कर्दमः
श्रीदश्चिक्लीत इति विश्रुताः ॥ ऋषयः श्रियः
पुत्राश्च मयि श्रीर्देवी देवता ॥ ९ ॥ ऋणरोगा-

दिदारिद्र्यं पापञ्च अपमृत्यवः ॥ भयशोकमन-
स्तापा नश्यन्तु मम सर्वदा ॥ १० ॥ श्रीर्वर्चस्व
मायुष्यमारोग्यमाविधाच्छुभमानं महीयते ॥
धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घ-
मायुः ॥ ११ ॥

इति लक्ष्मीसूक्तं समाप्तम् ॥

इदं पुस्तकं काश्यां मास्टर खेलाड़ीलाल महोदयेन
"नार्जप्रिंटिंग वर्क्स" नाम्नि यन्त्रालये पं० आत्माराम शर्माद्वारा
मुद्रयित्वा प्राकाश्यं नीतम् ।
विविध पुस्तक प्राप्तिस्थानम्
मास्टर खेलाड़ी लाल
संस्कृत बुकडीपो, कचौड़ी गली, बनारस सिटी ।

